॥श्रीगणेशायनमः ॐअस्यस्तोत्रस्याग
स्त्यऋषिरनुष्टुप्छंदः आदित्यहृदयंभ
तो भगवान्ब्रह्मादेवतानिरस्ताशेषवि
घ्नतया ब्रह्मविद्यासिधौ सर्वत्रजयसिद्धौ
चविनियोगः ॐनमो भगवते भो भोसू
र्य्यः दुष्टंदारयर दुरितंहनर पापंमथर
मारोग्यं कुरु र स्वाहा टं टं ह्रां ह्रीं ह्रूं ह्रैं
ह्रौं ह्रः ॐसहस्रारौं जं फट्स्वाहा ॥१॥

अमित्रदमनं पार्श्वयदा कर्त्तुसमारभ्भे
त्त् तदा वति रुतिं हत्वा त्रोम्ब्वरण
पंछ्ना॥ आक्रम्य वामपादेन आदिस
हृदयं जपेत्॥ तत्रसाधनमंत्रः॥ ॐ हि
मा ल्नी स्वाहा ॐ हिमाल्नीठं स्वाहा ॐ
नील्नीठं स्वाहा त्रिभिम्ब्वरोगी नवति
ज्वरी नवति पंचभिः जपेस्तु सप्तभिः
पार्श्वं रुद्रसीतनुमाविन्नोत्॥ २॥ श्री

ॐ नमो ०५८ ततो युद्धपरिश्रांतं सम
रे चिंतया स्थितं । रावणं चागतो दृष्ट्वा
युद्धाय समुपस्थितं ॥ दैवतैश्च स
मागम्य द्रष्टु मभ्यागतो रणं । उपागम्या
ब्रवीद्राम मगस्त्यो भगवास्तदा ३ ॥
ॐ नमो ०५८ राम राम महाबाहो श्रु
णु गुह्यं सनातनं । येन सर्वानरी

न्वत्स समरे विजयिष्यसे ॥३॥ ॐ पथ
आदित्यहृदयं पुण्यं सर्वशत्रुविनाश
नं। जयावहं जपं नित्यं अक्षय्यं परमं
शिवं ॥४॥ ॐ पथ ॥ सर्वमंगलमांगल्यं
सर्वपापप्रणाशनं चिंताशोकप्रशम
नमायुर्वर्धनमुत्तमं ॥५॥ ॐ पथ र
श्मिमंतं समुद्यंतं देवासुरनमस्कृ

तं प्रजयस्व विवस्वंतं भास्करं भुवने

श्वरं ॥ ६ ॥ ॐ ५२ ॥ सर्वदेवात्मको ह्ये

ष तेजस्वी रश्मि भावनः ॥ एष देवासुर

गणान् लोकान्पाति गभस्तिभिः ७ ॥

ॐ नमो ० ५२ ॥ एष ब्रह्मा च विष्णुश्च

शिवः स्कंदः प्रजापतिः महेंद्रो धनदः

कालो यमः सोमो ह्यपांपतिः ॥ ८ ॥

ॐनमो०५१।पितरोवसवः साध्यास्त्वश्वि
नौमरुतोमनुः वायुर्वह्निः प्रजाप्राणक्र
तुकर्त्ताप्रभाकरः॥९॥ॐ०५२।आदि
त्यः सविता सूर्यः खगः पूषा गभस्तिमान्
॥सुवर्णसदृशो भानुर्हिरण्यरेता दिवाक
रः १०॥ॐ०५२॥हरिदश्वः सहस्रार्चिः
सप्तसप्तिर्मरीचिमान्॥ तिमिरोन्मथनः

शंभुस्त्वष्टामार्त्तंडकोंशुमान् ॥११॥ ॐ॰५९
हिरण्यगर्भः शिशिरस्तपनोंहस्करोरविः
॥ अग्निगर्भोदितेः पुत्रः शंखः शिशि
रनाशनः ॥१२॥ ॐ॰५९॥ व्योमनाथस्त
मोभेदीऋग्यजुः सामपारगः ॥ घनवृष्टि
रपांमित्रोविंध्यवीथीप्लवंगमः ॥१३॥ ॐ॰
५९॥ आतपीमंडलीमृत्युः पिंगलः सर्व

तापनः॥ कविर्विम्बो महातेजा रक्तः सर्व
भवोद्भवः॥२४॥ ॐ०५८॥ नक्षत्रग्रहतारा
णामधिपो विम्ब भावनः॥ तेजसामपि
तेजस्वी द्वादशात्मन्नमोस्तु ते॥२५॥ ॐ
५९॥ नमः पूर्वाय गिरये पश्चिमायाद्रये
नमः॥ ज्योतिर्गणानां पतये दिनाधिपत
ये नमः॥२६॥ ॐ०५९॥ जयाय जय भद्रा

सूर्य्यायनमोनमः॥नमोनमः सह
स्रांशवे आदित्यायनमोनमः॥२७॥ॐ॰
५९॥नमउग्रायवीरायसारंगायनमो
नमः॥नमःपद्मप्रबोधायप्रचंडायन
मोस्तुते॥२८॥ॐ॰५९॥ब्रह्मेशानाच्यु
तेशायसूरायादित्यवर्चसे॥भास्वते
सर्वभक्षायरौद्रायवपुषेनमः॥२९॥

जै॥

५

ॐ०५९॥ तमोघ्नाय हिमघ्नाय शत्रुघ्ना
यामितात्मने॥ कृतँघ्नाय देवाय ज्यो
तिषांपतये नमः॥२०॥ ॐ०५९॥ तप्त
चामीकराभाय हरये विश्वकर्मणे॥
नमस्तमोभिनिघ्नाय रुचये लोक
साक्षिणे॥२१॥ ॐ०५९॥ नाशयत्येष
वै भूतं तमेव सृजति प्रभुः॥ पायत्ये

घृ

षतपस्येषवर्षस्येषगन्नस्तितिः ॥२२॥
ॐ०५१॥ एषसुप्तेषुजागर्त्तिभूतेषुप
रिनिष्ठितः॥ एषचैवाग्निहोत्रंचफलं
चैवाग्निहोत्रिणां ॥२३॥ ॐ०५२॥ दे
वाश्चक्रतवश्चैवक्रतूनांफलमेवच
॥ यानिकृत्यानिलोकेषुसर्वेषुपरम
वपुः ॥२४॥ ॐ०५२॥ एनमाप्त्वाद्रे

च्छेषु कान्तारेषु जयेषु च ॥ कीर्त्तयन्तु रू
षः कश्चिन्नावसीदति राघव ॥ २५ ॥ पू
जयस्वैनमेकाग्रो देवदेवं जगत्पतिं ॥
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यति
॥ २६ ॥ अस्मिन्क्षणे महाबाहो रावणं
त्वं जहिष्यसि ॥ एवमुक्त्वा ततो गस्त्यो
जगाम स यथागतं ॥ २७ ॥ एतच्छ्रुत्वा म
हातेजा नष्टशोकोभवत्तदा ॥ धारया

मासस्सुप्रीतो राघवः प्रयतात्मवान्॥
२८॥ आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षम
वाप्तवान्॥ त्रिराचम्य शुचिर्भूत्वा धनु
रादाय वीर्यवान्॥२९॥ रावणं प्रेक्ष्य हृ
ष्टात्मा जयार्थं समुपागमत्॥ सर्वय
त्नेन महता वृतस्तस्य वधेऽभवत् ३०
अथ रविरवदन्निरीक्ष्य रामं मुदितम
नाः परमं प्रहृष्यमाणः॥ निशिचरपति

संत्तये विदित्वा सुरगण मध्यगतो वच:

स्त्वरेति॥ ३१॥ इति श्री आदित्य हृदय सं

पूर्णं॥ संवत् १९२२ कार्तिक माघ शुद्धि २

लिषतु बलदेव बरहड कामविकि भौ वालि

मध्ये॥ १॥